यत्रेन्द्रकीलगिरिणा सह सौधराजिरत्युन्नतौ द्रढिमनि स्वविशालतायाम् ।
संस्पर्धते हसति चाश्मसुधामयत्वलावण्यसम्पदतिशीति मुखांशहैन्यान् ॥५२॥

सौधोच्चभूमि–विहरद्वनिता निरीक्ष्य दिव्याङ्गना निजविमानगतैः स्वहस्तैः ।
धर्तुं लपन्ति किमु तास्त्विति शंकमाना यानत्वराशिखरघृष्टविमानरुद्धाः ॥५३॥

यत्सुन्दरीवयसि कृष्णसरिन्निमग्ना दिव्याम्बराभरणभूषितदिव्यदेहाः ।
कूलेऽमरार्चनरताः परिवीक्ष्य को वा मंदाकिनीतटगता भ्रमरीः स्मरेन्न ॥५४॥

यत्सुन्दरीमणि–निमज्जनखेलनेषु शैलोन्नत–स्तनयुगाभिहतः प्रवाहः ।
उत्क्षेपितः पुनरधः प्रसृतः सुवेणी–भूत्वा प्रयात्यप इयं किल कृष्णवेणी ॥५५॥

यत्र द्विजेन्द्रनिवहाश्चतुरास्यनिर्यदाम्नायवागमृत–तर्पित–सद्बुधेन्द्राः ।
नानागमप्रकर–तत्त्वविचार–गोष्ठी–सिद्धान्त–बोधन–गुरुत्वजुषो जयन्ति ॥५६॥

यत्रावनीसुरगणाचरितैस्तपोभिरन्तर्बहिः क्रतुभिरर्चनसंविधानैः ।
स्वस्वालयोपगमनानवकाशहेतोर्वासं सदा विदधते सकलास्सुरौघाः ॥५७॥

विद्यालयेषु विविधेषु समस्तभाषा–साहित्य–बोधनपरेषु च शास्त्रतत्त्वम् ।
उद्बोधयन्त इह पण्डितपुण्डरीका भाषापतिप्रियपुरत्वमवापयन्ति ॥५८॥

गत्वा सुवाष्पशकटैः सह चेटिकाभिराक्रीडनेषु फलपुष्पगणं गृहीत्वा ।
आगत्य च प्रतिलतातरुसङ्गलक्ष्मीमाहुः स्म भर्तृभुजबन्धगतास्तरुण्यः ॥५९॥

किं नन्दनेऽपि किमु चैत्ररथेऽन्यदेवाक्रीडेषु वर्ण्यमिह नः प्रमदाजनेभ्यः ।
व्यासो ब्रवीति बहु यत्प्रससाद रत्नद्वीपस्थितोपवनसम्पदमत्र दुर्गा ॥६०॥

नाथामृतं दिविविशिष्टमिहोनमेतन्मुग्धे गवां हि पय एव सदस्ति नो किम् ।
नो चेत् कियत् कलशसम्मितमब्धिजातं तच्चाच्युतेन किल दत्तमथ स्व भूयः ॥६१॥

गोषु प्रतिष्ठितमिदं पयसोपलभ्यं तेभ्यो दधत्यहरहः किल कामगव्यः ।
तद्वंशजा ददति नः परमत्र दोह–भेदात् फले विषमता ह्यविशेोऽश एतत् ॥६२॥

लक्षाधिकाः सुरभयो नगरे वसन्ति तत्पूजनेन विधिवत्पयसोऽनुकर्षम् ।
सर्वाः श्रियोऽप्यमृतताभिमतार्थसिद्धिर्मोहो दिवीत उरुभोग इति प्रिये नः ॥६३॥

दुर्गाकृपातिशयतः सकलर्धयो नः पूर्णा दविष्ठगिरिरम्यतयाऽन्यमोहः ।
एवं मियोऽत्र मिथुनानि वदन्ति तुष्टान्याराध्नुवन्ति वरदां दृढभक्तितरताम् ॥६४॥

श्रीराजकीयविधि–निर्वहणानुशिष्टाः कालेय–दुष्कलुषदूरहृदः प्रकामम् ।
लोकानुरञ्जनरता निजधर्मनिष्ठा दुर्गामुपासत इमेऽपि सदातिभक्त्या ॥६५॥

ते क्षत्रिया फलिबलेन विभुत्वदूरा अध्यात्मधर्मनिरता अखिलार्थभाजः ।
आपन्नरक्षणविधौ निजशौर्यधैर्यौदार्यादिभिर्विभुपदं स्वमवेक्षयन्ति ॥६६॥

यत्रोदजा धनदभूतिविशेषभाजो वाणिज्यलब्धविभवा अतिधार्मिकाश्च ।
विद्यालयव्रजपुषो निरतान्नदान-शालामरालय-मुख-स्थपितात्मवित्ताः ॥६७॥

यत्राग्रिजा उपरि कृष्णहरिप्रमग्ना दुर्गां रविं द्विजवरं शिरसा प्रणम्य ।
स्वस्वोचितासु कृतिषु प्रयतन्त आर्या ईश-कृपातिशयतोऽखिलसौख्यभाजः ॥६८॥

अन्यान्यजातिजनिता अपि पञ्चमान्ता दुर्गाम्बिका-चरणपंकज-भक्तिभावात् ।
स्वस्वोचितार्थकलनेषु धनादिलब्ध्या दैन्यं विहाय सततं सुखमाप्नुवन्ति ॥६९॥

नादेवभक्त इह नाप्यसुखी न दीनो नैवागुणी न च जडो न च धर्महीनः ।
नाध्यात्मिकादि-परितापभुगात्मकर्मभ्रष्टो न शिष्टजनवैर्यपि दुष्टबुद्धिः ॥७०॥

ऐन्द्रेश्च कृष्णसुहृदो विजयस्य धाटी शक्तित्रयात्मक-शिवा-प्रियराजधानी ।
कृष्णाङ्गजात-तटिनी-परिपाविता च तस्यां विभूतिकलने क इह क्षमः स्यात् ॥७१॥

* * *

## महाकोसल प्रदेशाचें कीर्तिकथन*

महानदी, महामाया, महाशिव-महोभयाः ।
नृपा यत्र स देशोऽयं महाकोशलसंज्ञकः ॥१॥

महारत्ननिधिर्दिव्यो महाशक्तिधरो महान् ।
दीप्तोऽयं दक्षिणाशायां देशो दक्षिणकोसलः ॥२॥

शैले राजति नाट्यमण्डपमयं श्रीरामदुर्गं[1] शुभे
शृंगे[2] सिहपुरे च चित्ररचनालोला शिलाधामहो ।
नानानिर्झरशैलगह्वरगुहाः ख्याताः पुरातत्त्वतो
यस्मिन् सन्ति सुवर्णहीरकनिधिः[3] सोऽयं महाकोसलः ॥३॥

यस्मिन् मेकलपर्वतः सुविमलो रम्यामरकूटो वरो
भक्तिप्रेमविधायको हि भगवान् श्रीशौरिनारायणः ।
श्रीगन्धर्वपतिः कुलेश्वरशिवो राजीवनेत्रो हरिः
नाथो यत्र नृसिंहनाथ इति यैः ख्यातो महाकोसलः ॥४॥

---

*विक्रम स. २००० समाप्त होण्याच्या निमित्ताने नियोजित केलेल्या श्रीविष्णुमहायज्ञ (रायपुर) स्मारक ग्रंथातील पृ. ७२ वर.

१. रामगड (सरगुजा राज्य)च्या पहाडावर प्राचीनतम नाट्यमण्डप आहे.
२. सिहनपुर किंवा सिंघनपुर (नरहरपाली)
३. सम्बलपुर सहराजवळ महानदीगर्भस्थित हीराकूदस्थान.

सस्यश्यामलकान्तिपूरितरसा रम्या विहङ्गावली
यस्मिन् काननवाटिका सुविमला चित्रोत्पला तण्डुला[४] ।
चित्रा भूधरशृङ्गपर्वतपटा सोऽयं सदा कीर्तित
श्रीसौन्दर्यकलाकलापकुशलो धन्यो महाकोशल ॥५॥

सौन्दर्यं शिवनाथपुण्यपुलिने यत्रास्ति शान्तिप्रद
नृत्ये यत्र रता सुतैलतटिनी, हसोदका मानदा[६] ।
रेवारामवसन्तकोकिलकलो यस्मिन् सुधा वर्षति
पुण्यारण्यमयो महाकविकुलस्पर्धी महाकोसल ॥६॥

यस्मिंस्तिष्ठति पद्मलोचन इति ख्यात सुतीर्थो महान्
रेवा-शोण-विधौतरत्नधरणी शृंगाररामादिक ।
यस्मिन् राजति शम्भुसेवितजला चित्रोत्पला प्रोज्ज्वला
सोऽयं कोसलनाथ-कीर्तिकलितो देशो महाकोसल ॥७॥

*  *  *

आपल्या प्रदेशाचें माहात्म्य वर्णिताना त्यातील शूर, पण्डित, कलावन्त किंवा कविजन यांच्या नावाचा गौरवपूर्ण उल्लेख केलेला अनेक प्रदेशवर्णनात्मक काव्यात आढळतो त्या दृष्टीने महाकोशल वर्णनात अनेक अज्ञात पण सस्मरणीय कवींचा उल्लेख पाहाः—

## कोसलकवींचे कीर्तिगान

(प लोचनप्रसाद पाण्डेय लिखित, श्रीविष्णुमहायज्ञ (रत्नपुर) स्मारकप्रथात)

चित्रोत्पला-चुम्बित-चारुदेशे श्रीकोसले स्वर्णपुरे च शुभ्रे
ये कोविदा सत्कविवृन्दयुक्ता सन्ति स्म तेषामिह कीर्तिगानम् ॥१॥
रेवातटे रत्नपुरे च रम्ये तुम्माण-राज्ये तलहारि-भूमौ ।
महानदीवारिविधौतदेशे पुरा बभूवु कविकोविदा इमे ॥२॥

---

४ तण्डुलानदी टण्डुला किंवा तण्डुला नदी जी रायपुर आणि दुग जिल्ह्यातून वाहते

५ चित्रोत्पला (महानदी) सुतैल (तेलनदी किंवा तेलवाही नदी)

६ शिवनाथ, हसोदका,—हसदो किंवा हासदेव नदी ।
मानदा मान किंवा मान्द नदी

### ईशानः कविः

ईशानः कविराजपण्डितवरो विद्याकलापारगः
श्रील-श्रीपुर-गर्वगौरवदशी चित्रोत्पला-चारणः ।
राज्ञी श्रीशिवगुप्तभूपजननी श्रीवासटाधीसटा
येन श्रीपतिसद्मकीर्तिरचनापुष्पैः शुभैः पूजिताः ॥३॥

प्राक् पृथ्वीशः शिवयुतमहागुप्तबालार्जुनाख्यो
यस्य स्नेही सहृदयकविः सोऽयमीशानदेवः ।
जातो वंशे मुसर इति यो वर्म्मणां सूर्यवर्म्मा
पुत्रीं तस्य स्वनृपजननीं यासटां यः सिषेवे ॥४॥

### भास्करभट्टः कविः

प्राप्तो युद्धे नृपसदसि यः केसरिख्यातिमुच्चैः
भव्यं भूपं भवयुतमहो देवनामाभिधं तम् ।
त्यागी श्रद्धारत-गुणिजनप्रेमपात्रं शशंस
भट्टो नाम्ना कविकुलगुरुर्भास्करः कोसलेशम् ॥५॥

### ईशानो भास्करभट्टश्च

ईशानः कविराजराजितिलकश्चिन्तातुराङ्काभिधः
श्रीबालार्जुन-कोसलेश्वरसखः सत्काव्यचिन्तामणि. ।
भट्टाख्यः श्रुतिमान् मनीषिमुकुटो धीभास्करो भास्करो
यस्य श्रीभवदेवराजकमलं दिव्यं. करैः कान्तिमत् ॥६॥

### कृष्णदण्डी

यंत्र श्रीकृष्णदण्डी कुशलकविवरः सज्जन. शम्भुभक्तः
काव्यानन्दे प्रमत्तो हरचरितरसास्वादने दत्तचित्तः ॥

### कोशलेन्द्र. ययाति.

भूपालः कोसलेन्द्रो बुधकुलतिलकः श्रीययातिः प्रसिद्धः ।
वाग्देवीपादसेवी विबुधजनसखः श्रीकलिङ्गाधीशः ॥७॥

महानदीमण्डितकुञ्जभूमौ पुरे विनीतामिव साधपीठे ।
ताम्रे प्रशस्ति विशदां चकार श्रीकोसलेन्द्रो नृपतिर्ययातिः ॥८॥

चित्रोत्पलाचरणचुम्बितवारभूमौ श्रीमान् कलिङ्गविषयेषु यशान्तिपुर्याम् ।
ताम्रे चकार रचनां नृपतिर्ययाति. श्रीकोसलेन्द्र इति नामयुतः प्रसिद्धः ॥९॥

श्रीसिंहदत्तः

तातो यस्य विनीतनामकपुरे चक्रे पुरं नूतनं
हीरास्थान–महानदीतटवरे श्रीकोसले दक्षिणे ।
भूपो भीमरथः कलिङ्गतिलको यस्य प्रभायां प्रभुः
सोऽयं संधृतसन्धिविग्रहपदः श्रीसिंहदत्तः कृती ॥१०॥
भूपो भीमरथो महाभवयुतो गुप्ताभिधानो वर
आस्तेऽत्यन्तसुखे ययातिनगरे चित्रोत्पलाचुम्बिते ।
यस्य क्ष्मापरिपालने नयगुणे सोऽयं महाकोसले
प्रख्यातो धृतसन्धिविग्रहपदः श्रीसिंहदत्तः कृती ॥११॥

सुमङ्गलदत्तः

वन्द्यो दत्तसुमङ्गलः सुनिपुणः श्रीतारदत्तात्मजो
यस्मै कीर्तिमदात् सुमञ्जुलशिलालेखः शिवस्यालये ।

श्रीनारायणः

श्रीरामाभ्युदयाभिधं रसमयं काव्यं कृतं येन वै
श्रीनारायणसत्कविर्विजयते गोपालवीरप्रियः ॥१२॥

अज्ञातनामा

गन्धर्वेश्वर–पादपद्मज–सुधासक्तेन व केनचित्
दिव्ये धाम्नि सदाशिवस्य रुचिरे काव्यं कृतं प्रस्तरे ।
मालापुष्पसुगन्धचन्दनसमा शब्दावली निर्मला
सत्कीर्तिं वितनोति सत्कविकुले श्रीकोसले श्रीपुरे ॥१३॥

अल्हणकविः

गर्गेश्वरः सुकविरल्हंण ईशभक्तस्तुम्णाणदेशपति–राजसभाप्रधानः ।
पङ्केश्वरस्य गुणकीर्तनपुण्यधामा विद्यानिधिः सकलकोसलकाव्यचन्द्रः ॥
विद्वान् श्रीवत्सराजो नृपतिगुणकथागायकः कीर्तिसूनुः (कीर्तिधर)
तत्पुत्रो धर्मराजो निपुणकविवरश्चन्द्रचूडस्य भक्तः ।
मामेनामा कवीशः सुरगणजनको रत्नसिंहोऽस्य पुत्रः
ख्यातो वास्तव्यवंशो नृपवरसदसि प्राप्तमानो मनीषी ॥१५॥

कुमारपालः

श्रीमान् सहस्रार्जुनवंशदीपः कुमारपालः सुकविप्रधानः
महानदीवारिविलासमुग्धो महागुणज्ञो भवभूतिभक्तः ॥१६॥
विद्यानिधिर्ग्रामपतिर्मनीषी चण्डीशपादाम्बुजचञ्चरीकः ।
प्रासादकारः शशिशेखरस्य धन्योऽस्ति यः कोसलसत्कवीन्द्रः ॥१७॥

त्रिभुवनपालः

त्रिभुवनपालः कीर्तिमरालः कीर्तिविशालः सुकविदले ।
सुकविरसालोऽर्चितशशिभालो जितभवजालो भूमितले ॥१८॥

श्रीदेवपाणिर्बुधवृन्दवन्द्यः श्रीमान् नृसिंहो रचनाललाम ।
प्रशस्तिकार. कवितारसज्ञो दामोदराख्यो हरिभक्तिपूतः ॥१९॥

गीतमाधवसद्गीतिकाव्यमद्भुतमिष्टदम् ।
रेवारामकृतिर्गङ्गा-नर्मदा-लहरीसमम् ॥२०॥

श्रीवास्तव्यकुले जातः ख्यातः पण्डित इत्ययं
प्रशस्तिकारशृंगारो रेवारामो द्विजाग्रणीः ॥२१॥

*    *    *

## पंजाब देशाचें वर्णन

अस्ति समस्ते भारतवर्षे विख्यातः असंख्यपर्वतावलीनिगडितः, सकलपवित्र-महानदीप्रवेशपवित्रः शूरधार्मिकजनसंकुलः, नदीमातृकतया दौर्भिक्ष्यनाम्नाऽपि विहीनः विविधधान्योत्पादनसमर्थकृषितया सम्पन्नकृषीवलगणः स्थाने स्थाने साक्षात्कृतपरमतत्त्वै-र्विश्वाविलासमग्नैर्महानुभावैः प्राचीनमुनिभिः कृतप्रतिष्ठैः पवित्रैस्तीर्थैः समाकुलः निसर्गतः एवालौकिकसौन्दर्यया वनश्रिया भूषितः, पञ्जाबनाम्ना सम्प्रति व्यवह्रियमाण आर्यावर्तस्योत्तरः प्रदेशः ।

यत्र च सिन्धु-गंगा यमुना-सतलज चिनाब-संज्ञकाः पञ्चमहानद्यः परिवहन्त्यः स्वजलैरेन सकलमपि तदीय भूमिप्रदेशं सुसम्पन्नं सुखिनं कुर्वन्त्यस्तस्यास्योत्तरावर्तस्य 'पंजाब' नामविधाने साहाय्यमकुर्वन् ।

यस्य चोत्तरेण वर्तमानः सततनिपाति हिमानी समाच्छादितैर्लब्धाभ्रंकषनाम्नाऽपि-निर्दीनैरतिकोमलरविकिरणप्रकाशितैः रजतमयैरिव शिखरैर्गगनं विदारयन्निव स्वर्गगमन-मार्गालङ्कृत इव विराजमानः, साहसिकैरपि दुरारोहः निसर्गसुन्दरस्यास्यार्यावर्तस्य रक्षणाय भगवता निर्मित इवापार-शक्ति-मण्डितः, मुनिनिवासयोग्यो हिमालयः, दक्षिणेन सोऽयमतिविख्यातः क्षत्रियजन्मभूमिरिव वीरमयः शीलरक्षणतत्पर-ललना-भूषितोऽनेकैः श्रीप्रतापसिंहप्रभृतिभिः क्षत्रियश्रेष्ठैर्भूपालैः परिपालितो राजपुताने त्यपर-नामधेयो राजस्थाननामा महान् प्रदेशः, पश्चिमेन हिमालय-सुलेमान-हिन्दुकुश-नामाऽपरः पर्वतः, पूर्वेण-बौद्धमतानुयायिसुकुलमिलितैरनामा पर्वतमयो भूप्रदेशः शोभते ।

यस्मिन्नस्य बदरिकाश्रमप्रभृतीनि सकल-सनातनधर्मानुयायि-वन्दितानि शुद्ध-शान्ति-निःश्रेयसोदय-योग्यानि तपस्याम्थानानि, गंगोत्रीयमुनोत्रीप्रभृतीनि अलौकिक-

सृष्टिसौन्दर्यमण्डितानि, प्रबल्शीततया मानवनिवासानर्हाणि महानदीप्रभवस्थानानि, ज्वालामुखीमुखान्याश्चर्यस्थानानि द्रष्टा विलोक्य सुतरां विस्मितः ईश्वरध्यानप्रवणो भवत्येव ।

किं च य सकल-पृथ्वीतल निवासि-जन दर्शनार्हः, अतिविरलरविकिरणसताप-प्रशमित प्रबलहिमानीशीतः, परितो विराजमानहिममय-पर्वतावली परिवेष्टितः अत्युन्नत-शिखराग्रप्रवृद्ध घासभक्षणतत्पर च्छागसहतिसुन्दरः, अतिविस्तीर्ण-सतलज-प्रवाहभासुर शालीशैनदर्शनीयः, विशालहरितपल्लवमण्डित वृक्षगणारूढ पुष्पगुच्छालकृत लताजात निकुञ्ज मनोहरः केसर सुरभिगन्ध परिपूरित दशदिश., स्थाने स्थाने निर्निद्रकमलराजिभूषितै-रगाधजलैः सरोवरैरञ्जितः विविधगद-नाशक-जलैः सततप्रवाहिभिर्निर्झरैश्च विख्यात महार्घपट्टवस्त्रोत्पादनचण अनेककुल्याप्रवाहार्द्रो भूतलस्वर्ग इव सर्वेषामपि स्पृहणीय भारतभुवो विश्रान्तिस्थानमिव, सकलदेवगणविलासार्हो मुकुट इवार्यावर्तस्य काश्मीरनामा महान् प्रदेशोऽधुनाऽपि भूषयति ।

अपि च सकलभारतवर्षविख्याता' अनेकवीरपरित्यक्तकलेवराः भारतवर्षेतिहासस्य मातर इव सन्मान्या. कुरुक्षेत्रप्रभृतयो रणभूमय य समलकुर्वन्ति । यस्मिश्च भगवतो रावणारे रामचन्द्रस्य पुत्रेण लहुना स्थापिता लाहोरनगरी, प्रबलशौर्यशील धर्मानुयायिभि' स्थापिताऽमृतसरनगरी, तथा विविध-भारतभूपालैरधिष्ठिताऽगणिताश्च मेधपरिपूता 'इन्द्रप्रस्थ' इति प्राचीननामधेया 'दिल्ली' इति नूतनाभिधाना नगरी च पथिकजनैर्वीक्षिता अवश्य भारतवर्षस्य पूर्ववृत्तान्त स्मारयन्ति । [२]

* * *

## 'धारायशोधारा' काव्यसग्रहातील मालवदेशवर्णन

अस्त्युत्तरस्या दिशि नर्मदाया यो मालवाख्यो विततप्रदेश. ।
समृद्धिमुग्धो यमुपैति वस्तु कैलासनाथो हिमशैलशृगात् ॥
"मान्धातुरोकारपुरेऽमलेशो महाश्च-कालेश्वर उज्जयिन्याम्"
प्रासादयुग्मे वसत सुखेन विरक्तशम्भोर्द्विगुणा सुखेच्छा ॥५॥

### जलसमृद्धिः

नक्राकुला वेगवती गभीरा 'श्रीनर्मदा' दक्षिणत स्रवन्ती
सरक्षणार्थं किल मानवाना खाता विधात्रा परिखेव भाति ।
लिगानि शभोरमितानि यत्र तथा प्रतीकानि गणाधिपस्य
लुठन्ति नित्य सलिलेऽस्यवाऽस्याः ससर्गलेशाद् दृषदोऽपि देवा ॥६॥

२. श्रीपादशास्त्री हसूरकरलिखित 'शीखगुरुचरितामृतातून.'

'घर्मण्वतीय' जलपावनेति नाम्ये न शक्यो वदतोविघात
धर्माणि किंवा रुधिरं न लभ्य तस्या इदानीं स्फटिकाच्छनीये ।
यागेषु 'रन्ते' पशवो हता ये धर्माणि तेषा रुधिरावगाह्याम ।
पुराऽप्लवन्तेत्यभिधानमेतत् तस्यै प्रदत्त कविभि पुराणे ॥७॥

वेत्राणि सर्वत्र नदीतटेषु ख्याता परं वेत्रवतीयमेका ।
मन्येऽत्र वृत्त किल चक्रपाणि पार्थार्थसिद्धयै करतोत्रवेत्र ॥८॥

सिन्ध्वन्तराद् यद्यपि मन्दतोया सिन्धु प्रशस्या यमुनामखोत्वात ।
सता हि सगो नयति प्रकर्ष स्पर्शेन लोह क्रियते सुवर्णम् ॥९॥

क्षिप्रप्रवाहात् सरिदत्र 'सिप्रा' क्षिप्रेति लोके लभते च सज्ञाम् ।
श्रीकृष्णपादाब्जरज प्रसगाद् भाग्य तदीय त्विम् वर्णनीयम् ॥१०॥

एकाग्रचित्ता सुचिरादधीत्य सुदाम–सकर्षण–बालकृष्णा
श्रान्ता दिनान्ते पुलिने यदीये श्रमापनोद नियमेन चक्रु ॥११॥

नद्य पवित्रा. सकलाश्च लोके तथापि तासा बहु तारतम्यम् ।
विशिष्टमागल्यगुणादमीषा सकीर्तन मगलगीतिकायाम् ॥१२॥

## विन्ध्याद्रिः

आसां बहूना जनकश्च विन्ध्य सहस्रबाहु प्रतिकार्तवीर्य ।
सहस्रपादो भगवान् दिनेश सहस्रशीर्षो धरणीधरश्च ॥१३॥
तेज परेषा प्रसृत प्रभावि तेजोविशिष्टः सहते न जातु ।
नगाधिराजोऽप्रतिरद्वितीया विन्ध्यस्य जाता हृदि शल्यतुल्या ॥१४॥
कृत्वा प्रतिज्ञा भवितु यशस्वी स्पर्धां समारभ्य हिमालयेन ।
शिरोभिरुच्चैर्गगन बिभिद विन्ध्यो हिमाद्रिं द्रुतमत्यशेत ॥१५॥
आदित्यचन्द्रावनिलश्चरुद्धा अहश्च रात्रिश्च हतक्रमाऽभूत् ।
दिक्कालबोधो विहतो जनानामतर्यजात जगति प्रवृत्तम् ॥१६॥
सकरपपूर्व यजनादि कृत्य दिक्कालयोगस्तु स्वान्द्रयोन
दिक्कालमोहान्न भवन्ति यज्ञा सृष्टिर्न सस्य न सुख न तस्मात् ॥१७॥
देवा मनुष्या व्यथिता सचिन्ता रात्रिंदिव भूरि विचार्य कार्यम् ।
अन्यानुपायानपसार्य सर्वे प्रणम्य विन्ध्यस्य गुरु ह्यवोचन् ॥१८॥
उच्छृङ्खलोऽय तव पूर्वशिष्य पीडामनल्पां जगते ददाति ।
प्रभुर्यमानियोरपि गर्वहारिन् कार्त्यो विना न प्रभवेन्नियन्तुम् ॥१९॥
विन्ध्याद्रिरभ्रकषमस्तकोऽपि गुरोरगस्त्यस्य पदे ननाम ।
स्थित प्रयातेऽपि गुरौ तथान आसने म आदेष्टुमनप्रशिष्यान् ॥२०॥

"जित्वा विपक्ष गुरुरेव मोदो नत्वा गुरु किन्तु ततो गरीयान् ।
इत्थ विचिन्त्योन्नतमानसोऽसौ स्पर्धा-प्रयत्नाद्विरराम विन्ध्य ॥२१॥
यदा व्रजेत्सिक्षिपता विपक्ष उत्थानशील कुरुते प्रयत्नान् ।
निधाय चित्ते व्यवहारतन्त्र हिमाचल कि यततेऽद्युनाऽप्यम् ॥२२॥
शम्भौ शयाने हिमवानसाध्नोत् तथोन्नति हस्तशताधिका स्वाम्
अल हिमाद्रे ! तव वर्धनेन स्पर्धानिवृत्तो गुरुभक्तविन्ध्य ॥२३॥
धराधर-व्याप्तवसुधराया प्राथम्यमुच्चै शिरसस्तवैव ॥२४॥
अनर्थकोट्य प्रभवन्ति यत्र तवाचलस्योच्छ्रयणप्रयत्नै ।
जीवा न सोढु प्रभवन्ति दु ख यज्जायते स्वच्चलवृत्तियोगात् ॥२५॥
तुगोऽपि विन्ध्यो विनयावनम्रो गुरो पुरस्ताद् बटुवद् बभासे ।
सुपुत्रशिष्यौ विनयावलम्बाद् गुरोर्गुरुत्व परिवर्धयेते ॥२६॥
"मोत्तिष्ठ यावत्पुनरैमि वत्स" शशास विन्ध्य चुलुकीकृताब्धि ।
आज्ञाप्रमाण सतत गुरोर्मे प्रोवाच विन्ध्योऽपि नियम्य चित्तम् ॥२७॥
अगुष्ठदानेन वशीचकार द्रोणस्य चित्त शबरैकलव्य ।
तथास्तिकार्थेऽप्यरितक्षकस्य ररक्ष जीव जनमेजयोऽपि ॥२८॥
गुरो समक्ष बहुधा भयेन शिष्या नियोगान परिपालयन्ति ।
तस्मिन् प्रयातेऽपि दिव पुनर्ये ह्याज्ञापरा सन्ति त एव धन्या ॥२९॥
चिच्छेद रामोजननीशिरोऽपि तत्याज राज्य रघुराजसूनु ।
ददौ पुरुर्यौवनमात्मपित्रे आज्ञा गुरूणा ह्यविचारणीया ॥३०॥
निद्राप्रदा शोथहरा गुणाढ्या रुग्यातनाहृन्त्यतिसारशत्रु ।
अत्रैव रोहत्यहि-फेनवल्ली शस्यन्तरश्यामलमालवेषु ॥३१॥

## उज्जयिनी

क्षेत्र पवित्र नगर समृद्ध सिप्रातटिन्या निकटे निविष्टम् ।
यस्मिन् महाकाललालाटचन्द्रात तमिस्रपक्षेऽपि निशा प्रकाशा ॥
अवत्यवन्ती भवसिन्धुमग्नाञ्जयत्यरीनुज्जयिनी युयुत्सून् ।
द्वेधाऽप्यसावस्ति यथार्थनाम्नी महत्त्वमस्या मनसोऽप्यभूमि ॥
सुवर्णशृगेत्यमरावतीति पद्मावती पुष्पकरण्डिनीति ।
तथा विशालेत्यभिधानमाला तस्या गुणान किञ्चिदिव ध्वनक्ति ॥
अग्नीन्दु-सूर्यात्मक-लोचनस्य ज्योति स्वरूपस्य महेश्वरस्य ।
ज्योतिर्मयद्वादशलिगमध्यात् कालाभिधान बहु राजतेऽत्र ॥
कैलासनाथस्य निकेतन तत् प्रवासहेतुर्यतियात्रिकाणाम् ।
विलासभूमिर्विदुषा कवीना भूवासमुक्तिजडचेतनानाम् ॥

अधीत्य यस्यां सकलाश्च विद्याः सर्वज्ञतां प्राप यदूत्तमोऽपि ।
कामं कुशाग्रा यदुनाथबुद्धिः सांदीपनेः कौशलमप्यनल्पम् ॥
यद्वेधशालाद्भुतशिक्षणेन विकासमायाति बुधस्य दृष्टिः ।
न केवलं भूतलमेव यस्या नभःस्थतारा विषयीभवन्ति ॥[3]

* * *

(अखिलानन्दशर्मा कृत 'दयानन्ददिग्विजया'तील)

गुर्जरदेशवर्णन (सर्ग २ रा)

तस्यैवंविधवृत्तस्य धीरोदात्तस्य धीमतः
देशभूमिरभूद् भव्या भव्यानन्तफलप्रदा ॥१॥
यत्र नानावनोद्देशविराजद्–वृक्षमण्डपे ।
मण्डलीकृतसद्बर्हा प्रनृत्यन्ति कलापिनः ॥२॥
अद्यापि यत्र विषये वसन्तो मनुजाः सुखम् ।
गणयन्ति न वैशेष्यात् स्वर्गस्यामरावतीम् ॥३॥
नाना–सस्य–समृद्धाभिरारामतरुपङ्क्तिभिः ।
लसते परमा यत्र भूमिरप्यतिशोभना ॥४
पीनापीनभराक्रान्तलसन्मन्थरगामिनो ।
राजते नितरां यत्र गवामपि परा ततिः ॥५॥
वापीकूपतडागेभ्यस्तोयाहरणहेतवे ।
गताः प्रतिपथ यत्र रमन्ते तोयहारिकाः ॥६॥
पयोधर–पतत्तोय–सम्पन्नान्न–विशोभिताः ।
देवमातृकतां यत्र गायन्ति बहु गोपिकाः ॥७॥
समस्त–वस्तुविस्तार–स्तुतिप्रस्तार–भूषिता ।
पृथिवीतलरत्नाभा या कृता परमेष्ठिना ॥८॥
(युग्मम्) तस्यामत्यन्तभव्यायां मोरवीराज्यमण्डले ।
सर्वशक्तिमतोऽनन्तशक्त्यैव परिकल्पिता ॥९॥
श्रीमती मतिमन्मान्या माननीयजनान्विता ।
समस्तवस्तुबहुला विद्यतेऽनुपमा पुरी ॥१०॥
यत्र नैसर्गिकी काम्यकल्पनानल्पसुन्दरी ।
जनता जन–तापानामपायाय विजृम्भते ॥११॥

---

३. दिगम्बर महादेव कुळकर्णी, संस्कृतसाहित्यसुधाकर, सातारा विरचित 'धारायशोधाराः' काव्यातील मालवगौरव भाग.

कामदेवतिरस्कारकारिणी यत्र सर्वदा ।
सर्वदा रूपसम्पत्तिर्जनानामस्य वर्तते ॥१२॥
नानावस्तुमहत्कोषपोषमात्रपरायणाः ।
कुबेरमपि मन्यन्ते न यत्र धनिनो विशः ॥१३॥
( युग्मम् ) चारस्त्रीबहुभोग्याऽपि रक्तवर्णापि या पुरी ।
अखण्डित-चरित्राढ्या चन्द्रिकोज्ज्वलतान्विता ॥१४॥
बहुप्रकृतियुक्तापि स्थिरा चित्रितभित्तिभिः ।
प्रव्यक्तविश्वरूपेव सशैलेवोच्चवेश्मभिः ॥१५॥
संध्यारागारुणा यत्र सिन्दूरमणिकुट्टिमे ।
सहस्रांशोरविश्रान्ता विराजन्ते गभस्तयः ॥१६॥
भूषणप्रभया यत्र रजनीष्वपि योषिताम् ।
व्यर्थतां नीयते रम्या दीपकाली विलासिभिः ॥१७॥
गुर्जरीवचनालोकलज्जामन्थरसंक्रमः ।
कलङ्कापनयं वाञ्छन् प्रासादानुपगच्छति ॥१८॥
सौधाग्रशायि-वनिता-मुखालोकान्मदोद्धतः ।
पतितो यत्र लुठति प्रतिमामिषतो विधुः ॥१९॥
प्रभातोत्थित-हारीत-पठ्यमान-शुभाक्षरैः ।
प्राभातिक्यो विधीयन्ते व्यर्था मङ्गलगीतयः ॥२०॥
अस्थिरत्वं पताकानां मित्रद्वेषो निशाव्रजाम् ।
कोषगुप्तिरसोनां नु लक्ष्यते यत्र नान्यथा ॥२१॥

* * *

## केरलावनी (कवि – सुब्बरामभट्ट)

भार्गवस्य भूरिति प्रसिद्धिमीयुषी पुरा चक्रवर्तिनो बलेः सुशासनेन रञ्जिता ।
पुण्यतीर्थपावितैषमार्यलोकसेविता केरलावनी चकास्ति पावनी पुरातनी ॥१॥
एकतामुपेयुषी पुरैव भारते नृणां वेशभूषणादिनापि भिन्नराजशासना ।
भागधेयतोऽप्यनेकभावभासुरा भृशं केरलावनीललाम भाति भार्गवावनी ॥२॥
शैलसागरान्तरालशोभिनी, विभूषिता केरपूगपादपैः सरित्तटाकपोषिता ।
सर्वसस्यशालिनी समृद्धशालिसञ्चया श्रीविलास-लास्यभूमिराविभाति भूरियम् ॥
नैकजातिमार्गवर्णललिताऽपि भूरियं सौहृदव्यभासमानमानवावलीवृता ।
सन्ततोपचीयमान-नव्यभव्यतन्ततिर्भातु भारतावनौ विशालकालचित्रकम् ॥४॥
वेदशास्त्रशिल्पगीतनाटचनृत्तकोविदा शिष्टजुष्ट-सत्पथानुयायि-लोकपूरिता ।
विष्टपस्य मङ्गलानि सर्वदापि कुर्वती केरलावनी चकास्तु पण्डिताग्र्यमण्डिता ॥५॥

अशा प्रकारे भारतान्तर्गत सर्व प्रदेशाचें वर्णन देऊन राष्ट्रीय संस्कृत काव्याचें हें प्रकरण येथें थांबविता येईल. शेवटीं आम्ही लिहिलेल्या 'शिवराज्योदयम्' या महाकाव्यातील महाराष्ट्रवर्णन व 'मातृभूलहरी' या आमच्या एका शतककाव्यातील भारतभूवर्णन उद्धृत करून हें प्रकरण संपवितों.

* * *

## श्रीशिवराज्योदये (महाकाव्ये)

### प्रथमसर्गे महाराष्ट्रवर्णनम्

श्रीमदूर्जितमुदग्रमैश्वरं सर्वदु खविपदोघसहरम् ।
धाम शैवमयवाऽस्तु वैष्णवं मन्महे मनसि तन्निरन्तरम् ॥१॥
अस्ति दक्षिणदिगेकमण्डनं नाति तुङ्गशिखरावलीमयम् ।
भारतस्य परमप्रियं महाराष्ट्रमित्युचितनाम मण्डलम् ॥२॥
भाति यत्र शिखरावली मधौ पुष्पित-व्रतति-जालकावृता ।
पुष्प-बिल्वदल-पुञ्जपूजिता स्थाणुलिङ्गशत-मालिकेव सा ॥३॥
यत्र पर्वततटीस्खलन्नदी-नीरगद्गदगदन्महाध्वनिं ।
मेघगर्जितधियाऽभिनन्दते ताण्डवेन समदं शिखावले ॥४॥
वार्षिकालिक-सहस्रनिर्झरैः भास्करोज्ज्वल-मयूख-भास्वरैः ।
भाति हीरकरसावगुण्ठितो रत्नसानुरिव यो द्रवीभवन् ॥५॥
दुर्गसानु-जलकुण्ड-दर्पणोद्बिम्बिता शरदि तारकावली ।
यत्र सम्परिविसर्पि-रोचिषा विन्दते द्विगुणितोज्ज्वलप्रभाम् ॥६॥
मेघपुञ्जवृत-तुङ्गशृङ्गवान् शारदीं च दधदैन्दवीं कलाम् ।
ध्यानसुस्थिर-विशालविग्रहो व्योमकेश इव चन्द्रशेखर ॥७॥
यस्य दु सहनिसर्गतेजसा कुण्ठितं रिपुकुलैर्विनिर्ममे ।
रोष-नि श्वसित-सोष्मगात्रतं हैमनेऽपि पवने पयोष्णता ॥८॥
ज्योतिषा परिविकीर्णरोचिषा यत्र दाहसमयेषु सहृतम् ।
विप्रताप-भय-लज्जया ध्रुवं दाहतापिकमधित्यकास्वपि ॥९॥
सह्यशैलजनिता सरिद्वरा येन भाति हि निजाङ्क-लालिता ।
पूर्वसागर-समागमोत्सुका स्वर्णदीव गिरि-चक्रवर्तिना ॥१०॥
दैवतात्म-हिमशैल-सञ्चितं सिन्धुतोऽम्बु परिगृह्य पावनम् ।
सिन्धुसागर उदूर्मिपाणिभि य निषिञ्चति चिराय भक्तित ॥११॥
उन्नतावनत-सानुराजिभि य पिताऽपि सरिता सहस्रश ।
पार्थिव पतिरिव प्रभासते सुस्थिरायित-महोर्मि-भीषण ॥१२॥

राप्त-दिव्यकुलपर्वतान्तरे सप्तवाहवदतिप्रतापवान् ।
सह्यनामभूदपीह य सदाऽऽविश्चकार हि निजामसह्यताम् ॥१३॥
सागर. परशुरामयाचितो याचकस्य समवेक्ष्य वीरताम् ।
यस्य पश्चिमतटाश्रिता ददौ वासभूमिरिति तामुपत्यकाम् ॥१४॥
द्वादशात्मशुभलिङ्गतोऽधिकान्यत्र भूरिरुचितोऽप्यधात्य च ।
शम्भुना तदितराणि भारते सर्वतो निदधिरे कथञ्चन ॥१५॥
ज्ञाननिष्ठजन-वित्तविष्टरश्चञ्चलश्रुतिविशिष्ट-विग्रह ।
यत्र चाष्टविषयेषु राजते सोऽष्टसिद्धिविभवो विनायक ॥१६॥
तच्चिरन्तनमहर्षिसेवित प्राप्य पूतवटपञ्चक पदम् ।
यत्र दाशरथिनाऽपि विस्मृत मातृसन्निधिमहासुख चिरम् ॥१७॥
रामचन्द्रपदपङ्कजाङ्किता जानकी-विरहदु ख-साक्षिणीम् ।
यत्र पावनतमा वनस्थलीं वन्दते परमभक्तितो जन ॥१८॥
रावणापहृत-जानकीशुचा व्याकुलस्य रघुनन्दनस्य च ।
येन वानरबलेन सर्वथा घोरसगरसहायता ददे ॥१९॥
ग्रामसीमसु सरित्तटेषु वा यत्र पिप्पलतलेषु दृश्यते ।
लोहितो ह्यसुरशोणितैरिव दक्षिणाभिमुख-वीरमारुति. ॥२०॥
ब्रह्मविष्णुशिवनामतस्त्रिधा सविभक्तवपुष परात्मन ।
यत्र चात्रिमुनिपुत्रविग्रहे भावुकैश्चिरमुपासितैक्यता ॥२१॥
अप्रतिष्ठमिव काशिकापुर सामवेदविदुषां द्विजन्मनाम् ।
गर्जनाभिरकरोच्च तत् प्रतिष्ठामस्य हृदयैकभूषणम् ॥२२॥
कीर्तनाहत-मृदग-मर्दल-कास्यताल-शत-सालनादिनी ।
भक्तियोगपयमन्द्रघण्टिका यत्र पण्ढरपुरी विराजते ॥२३॥
पाण्डुरङ्गदृढभक्तिविह्वला पण्डिताश्च वणिज कृषीवला ।
यत्र सत्कविपवित्रगीतिभि नादयन्ति गिरिकाननान्यपि ॥२४॥
ईश्वरोपनिषदर्थबोधिनीं ज्ञानभक्तिकवितासुधामयीम् ।
प्राकृतामपि गिर चकार यो ज्ञानराज इह सो पितिष्ठति ॥२५॥
योगिभिश्चिरसमाधि-धारिभिर्भूमिगर्भ-निहितात्ममूर्तिभि ।
देश एष सकलोऽपि सस्फुरद्-योगशक्तिरिव भाति सवथा ॥२६॥
भूमिगर्भगत-शास्त्रविज्जन प्रज्वलन्मुखमनु महागिरिम् ।
शङ्कते, परमनेन तत्सदाऽ विष्कृत निजजनोग्रतेजसा ॥२७॥
व्याघ्रवृन्द-वितनोच्चगर्जनं गह्वर-प्रतिनिनाद-मेदुरं ।
व्यञ्जयत्यतिभयकरायति पौरवृत्तिमिव य स्वभावजाम् ॥२८॥

य स्वधर्मपरिरक्षणोद्यतं सङ्गशूलधनुरादिभीर्विदं ।
शस्त्रकोश इव सबभौ जनं हिन्दुभू-कटितटावलम्बित ॥२९॥

आहिमाल्यमुदीर्णसद्यशा वीरवर्य-विनताङ्घ्रिपङ्कज ।
येन मेकलसुता-तटे कृतो दर्पहीन इव दर्पवर्धन ॥३०॥

सर्ववर्ण-कुल-सम्भवाङ्गना जन्मसिद्ध-रणरागत सदा ।
यत्र शस्त्रमय-केलिशालिनी चण्डिकेव ददृशेऽद्रिसम्भवा ॥३१॥

मल्लकेलिषु विशेषरागत शोण-मृत्कण-विलिम्पनैर्नरा ।
यत्र धार्थयसितान स्वमूर्धजान् चक्रिरेऽम्बुज-पराग-सुन्दरान ॥३२॥

पारतन्त्र्य-हृतशक्तिभिर्जनैर्यत्र वीरचरितेऽवलोकित ।
दुष्प्रधर्षतम-वीर्यभासुर क्षात्रधर्म इव मूर्ति-सञ्चर ॥३३॥

राक्षसप्रतिम-घोरशात्रवे प्रेरयन् मरणभीति वेपथुम् ।
*चाप-खड्ग-शर-राम-कृपाणो योऽभवत् प्रतिनिधि स्विकमणा ॥३४॥*

यत्र वेरुलशिलोच्चये दृढ युद्धविष्णुशिवसेवकं कृतम् ।
शिल्पकर्म सवनल्पमूर्तिक विस्मयास्पदमशेषभूतले ॥३५॥

यद् विलोक्य सकला कलाविद विस्मयस्तिमितलोचना इव ।
स्वानुभूतिमपि तर्कयन्ति ते स्वप्नयच्च वितते ब्रजान्यन् ॥३६॥

वेदनाद-रहितेऽपि भूतले वैदिकद्विज-कुलोच्छ्रितं स्वरं ।
मार्जित-प्रणववर्ण-मूर्धगश्चन्द्रबिन्दुरिव यो ह्यभासत ॥३७॥

धर्मराज्यजनित सुदुर्लभं पुण्यकर्मनिरतैश्च मानवै ।
यत्र भूमितल एव पावने स्वर्गलोकसुलभ व्यभूयत ॥३८॥

* * *

## मातृभूलहरी

कवि श्रीधर भास्कर वर्णेकर, नागपूर

रत्नाकराधौतपदां हिमालयकिरीटिनीम् ।
विन्ध्यकाञ्चीं सरिन्मालां वन्दे भारतमातरम् ॥१॥

नमोवाकं साकं प्रणति-ततिभिर्भावुकतया
प्रियं गायं गायं तव गुणचयं पुण्यनिलयम् ।
स्मरन् स्वान्ते शान्ते तनुमतनुमुजस्वलश्चम्
जगद्वन्द्यां वन्दे प्रथितयशसं त्वां भरतभू ॥२॥

किरीट सद्रत्नप्रभव इति गीतो नगपति
समुद्रोऽसौ रत्नाकर इति मतो वल्गुवलय ।
अजस्रं सम्पन्ना पुरुषमहिलारत्ननिवहै
अहो राजत्येवा भुवनतलरत्न भरतभू ॥३॥

अवाच्या भूरेषा मलयज-रज सौरभमयी
प्रतीच्या माधुर्यप्रचुर-फलसभार-सुरसा ।
उदीच्या काश्मीरप्रभव-कमनीय-द्युतिमती
तथा प्राच्यामुच्चैर्विपुल-कलम-क्षेत्रसुभगा ॥४॥

शुभावम्भ कुम्भावुभयजलधो यत्र निहितौ
स्थिरारक्षौ पूर्वापरककुभवस्यौ गिरिवरौ ।
सरिल्लेखा-रङ्गावलि हिमनगोच्चं कलशभृत
तवागार पुण्य तदखिलशरण्य विजयते ॥५॥

प्रतानैर्वल्लीना सुरुचिरहरिद्वल्कलभृत
गुहाभ्यन्तर्वार्ते क्वसितकरणे सयमजुष ।
प्रवाहैर्वारीणा धृतविमलसूत्रा इव सदा
विभाति प्राधीता इव तव समस्ता शिखरिण ॥६॥

वसन्ते त्व वाणी रसिततरसिके कोकिलकुले
शरत्काले लक्ष्मीर्दिशि दिशि लसत्पद्मनिवहे ।
अपर्णा हेम ते खलु गलितपर्णेषु तरुषु
विलोके त्वा मात सततमभितो दैवतमयीम् ॥७॥

विधात्री धर्माणा निगमदृढमूलातिविमला
सवित्री चार्याना मणिकनकबीजा सुरुचिरा ।
प्रदात्री कामाना बहुविधकलापुष्पसुफला
सुरच्छाया मातस्त्वमसि भुवने कल्पलतिका ॥८॥

प्रपा पुण्या शीतामलजलमया सप्तसरित
प्रसन्नास्ते काश्मीरज-मलयजोद्गन्धपवना ।
सुगीत पाथेय तदुपनिषदा सारमतुल
विमुक्तेर्मार्गे त्व खलु सकलधर्माश्रमसमा ॥९॥

मदीय गोविन्दाम्बुचरणसरपद्मविमला
ह्यरण्यानीय श्रीरघुपतिपदाङ्का प्रतिपदम् ।
स्थली चेय यादव-मुनिगण-तप पूत-पवना
सर्वत्र माहात्म्यं स्वमिदमपि वाचा अपि द्युता ॥१०॥

यदा सर्वं मातर्भुवनमिदमासीच्छिशुनिभं
वचोहीनं दीनं विहितदृगिवाज्ञानतमसा ।
तदा गंगातीरे स्फुरित–विमल–प्रातिभ–दृशः
चतुर्वेदोद्गानं जननि ! निगिरन्ति स्म मुनयः ॥११॥

अबोधोपग्रस्तं जगदिदमभूद् देवि ! सकलम्
अभोक्तव्यासक्तं क्षणिकनिजदेहात्मधिषणम् ।
तदा ते तत्त्वज्ञ–द्विजसदन–सम्बन्धसुधियः
परब्रह्मात्मैक्यं स्फुटगिरमभावन्त हि शुकाः ॥१२॥

विहिंसन्तो धर्मं नृपतिपदलोभान्धमतयो
यदन्यस्यानीया रणमपि गता धर्मगुरवः ।
त्वदीया निर्विण्णा इव तु सुखभोगैर्नृपतयः
प्रयाताः सन्यासाश्रममखिलकल्याणमतयः ॥१३॥

अगाधप्रज्ञा तेऽस्फुरदयि मुनिव्यासवचने
निगूढा तत्तत्त्वग्रहणपटुता शङ्करमतौ ।
चतुर्योगप्राप्या भुवनगुरुता कृष्णचरिते
नृपालोच्चैर्नीतिर्गुणवति रघूत्तंसचरिते ॥१४॥

अहिंसा ते मातर्जिनगुरुकृपापाणिकमले
तथा मायादेवीतनय–नयनेऽपारकरुणा ।
सदाचारे श्रीमद्बसवविहिते सर्वसमता
तितिक्षा हौतात्म्ये जननि दशमेशस्य ददृशे ॥१५॥

तवौदार्यं धुर्यं शिबि–दधिचि–कर्णादिचरिते
हरिश्चन्द्रे धर्मे दशरथसुते सत्यवचनम् ।
ध्रुवे प्रह्लादे वा भगवति मनस्वित्वमतुलम्
अखण्डं भ्राजन्ते ह्यगणितगुणा एवमिव ते ॥१६॥

महाभक्ता दत्तामितविभववित्ता वनगताः
तपःपूता धूताखिलकलुषजाता बहुमताः ।
प्रकाशन्ते शश्वत् प्रबलचलसंसारजलधौ
अये दीपस्तम्भा इव हततमस्कास्तव सुताः ॥१७॥

तवोत्सङ्गे विष्णुर्भगवति ! चतुर्विंशतिविधैः
वपुर्भिः स्वच्छन्दं तनय इव चिक्रीड बहुशः ।
तदा काले काले तदुचितसपर्यायमवशाः
प्रपन्नास्ते देवास्त्वयि च कपिगोपादितनुभिः ॥१८॥

न मूलं मत्किञ्चिन्नवमपि हितेऽनौषधमयि
न चामन्त्रं किञ्चित्तव सुरगिरो ह्यक्षरमपि ।
अगङ्गा नो काचिल्लघुतर-सरिच्चापि गणिता
न जीवस्त्वय्यम्ब ह्यशिव इति कश्चिन्निगदितः ॥१९॥

परिश्चोतद्-भास्वत्तर-तरलतेजःपटलभृन्
-महारत्नाभाभिर्निजजठरगाभिः शबलितैः ।
शुभाम्भोभिश्चञ्चल्लहरिरमणीयैः स वरुणः
तनोतीवाखण्डं तव चरणसंक्षालनविधिम् ॥२०॥

मृहन्नीलाम्भोद-प्रथितगजचर्मैकवसनः ।
शरज्ज्योत्स्नाभूतिर्हिमधवलहासस्तपदृशिः ।
मधुस्फीतोन्माल्यो निरवधि पुरस्ते वितनुते
महाकालः साक्षान्नट बलत्ताण्डवविधिम् ॥२१॥

विशालं भूगोलं भगवति ! महन्मन्दिरमिति
त्वदीयाया मूर्तेरतिशयपवित्रं विगणयन् ।
विधुः प्रायश्चित्तीव स निजमहापापमनिशं
ध्रुवं दूरीकर्तुं स्वभिमुखमभिभ्राम्यति हि तम् ॥२२॥

त्वदाधारप्राप्ताऽपरिमितशुचित्वेयमवनी
भृशं पापात्माऽहं निजगुरु-कलत्राभिगमनात्
ध्रुवं मत्वेत्येवं स्वकलुषनिरासार्थमवशो
विधुर्भूमिच्छायां तिमिरमलिनां गाहत इव ॥२३॥

अपूतंमन्या सा हरिचरणयोगादथ यदा
वियद्गङ्गा खिन्ना पुरहरशिरोवासमगमत्
ततो यस्याः सङ्गं कथमपि समासाद्य समगाद्
अलभ्यं पावित्र्यं जयतु सततं सा भरतभूः ॥२४॥

भ्रमत्ताराचक्र-स्थिरतर-महाकेन्द्र-पदवीं
समध्यासीनं यद् ध्रुव इति यथार्थाह्वविदितम् ।
महस्तत् सप्तर्षि-भ्रमि-घटित-नित्यार्चनविधि
ध्रुवं त्वत्पुत्रस्य व्रतमनुकरोति ध्रुवनिशोः ॥२५॥

त्वदीयाः पाषाणा अपि खलु सरित्तीरपतिता
हृपा गावो नागा किमुत भुजगाश्चापि सविषाः ।

शमि-न्यग्रोधाद्या विविधतरवो मातरनिश
प्रपूज्यन्ते भक्त्या भगवति ! जनैर्दैवतधिया ॥२६॥

शरन्मेघच्छाया-क्षणचलमिदं यौवनधनं
तथा चञ्चत्पङ्केरुहदलजलं जीवनमद ।
जगद्रज्जौ सर्पभ्रमवदतिमिथ्येति सहसा
विजानन्तो बाल्येऽप्यपि तव सुता ब्रह्मणि रता ॥२७॥

प्रवीरश्चन्द्रश्रीर्हतशकयशः श्री रिपुहरि
अशोक सङ्ग्रामाङ्गण-हति-सशोकः सहृदय ।
प्रदाता श्रीहर्षो विहितजनहर्षो गुणनिधि
यशस्तेजःपुञ्जास्तव हृदयहारस्यमणय ॥२८॥

गुरुर्गोविन्दोऽसौ खलयवन-विध्वंसन-पटु
प्रतापोऽसौ मत्ताधिप-दमन-सिंहो वनगत ।
शिवाजिर्दुष्टारि-प्रहरण-शिवाऽजिर्गिरिचर
त्रिशूलस्ते ह्येषा त्रिविधमयि ! तेज प्रसरणम् ॥२९॥

प्रचण्ड सह्याद्रि कटिनिहितकोश खलु तव
हिमाद्रिस्तूणीरो विधृत इव विन्ध्य परिकर ।
सरित् सिन्धु क्रुद्धभ्रुकुटिरटवी रोमनिचयो
महाचण्डी नूनं त्वमसुरगणानां भयकरी ॥३०॥

रहस्यं विज्ञातुं भगवति ! तवाध्यात्मविषयं
समेता गोदण्डा य इह बहवो नास्तिकधिय ।
त्वदीयानां साक्षात्कृत-परतरब्रह्म-सुधियाम्
ऋषीणां भव्यानां चरणशरणास्ते समभवन् ॥३१॥

इयत्ता शीलानां सुगतजननि ! त्वय्युपहिता
बृहत्ता शास्त्राणां कपिलजननि ! त्वय्यवगता ।
महत्ता योगानामपि सकलयोगीशजननि !
तथा सद्धर्माणामिह जगति सत्ता परिणता ॥३२॥

रसं सान्द्रं काव्यं जगति शिरसा धार्यमितरं
सुखप्राप्यं स्वर्गं नृपतिगणयाच्ञाभिरिह वा ।
चरित्रं शिक्षेरन् द्विजगणसकाशात् स्वकमिति
श्रुतो विद्वद्‌भिस्ते जननि ! सुयशोदुन्दुभिरव ॥३३॥

अविश्रान्तं जन्मावधि निजकलाकर्मनिरतैः
त्वदीयैरज्ञातैरपरिगणितैः शिल्पकुशलैः
कठोराद्रिग्राव-क्वथन-घटितं शिल्पमतुलं
मतं सत्सर्वेषां त्रिभुवनमहालङ्करणवत् ॥३४॥

महारण्योद्भूतौषधिभिरथ गाङ्गैश्च सलिलैः
सलील सर्वेषामपि परिहरन्ती तनुरुजम् ।
मनस्तापं पापं जगति सकलं शङ्करगिरा
निराकुर्वन्ती त्वं जननि खलु सञ्जीवनमसि ॥३५॥

स्फुरद्वज्राघात-प्रखर-विपदोघानपि चिरं
सहित्वा लोकेऽस्मिन्नसुरगुरुसम्पद्वियमिते ।
त्वया दैवी सम्पत् परमहितनिःश्रेयसकरी
निरालम्बाऽनाथा भगवति सनाथा खलु कृता ॥३६॥

स्वधर्मैकप्राणैर्निजरुधिरसिक्तानि नृवरैः
सतीभिर्वा देहोद्दहनपरिशुद्धानि सुचिरम् ।
धृतोच्चैर्वल्मीकान्यपि तव सुतीर्थानि मुनिभिः
किणाङ्कं मे भूयाद् भगवति ललाटं प्रणामन. ॥३७॥

नवीनास्त्रस्फोटैर्भुवनतलविध्वंसमनिशं
समाशङ्क्य ग्रस्ता खलु मरणभीत्या हि जनता ।
स्थिरा विश्वक्शान्तिं परिमृगयमाणेव हरिणी
श‍ृणोत्यत्युत्कण्ठं तव जननि ! सन्देशवचनम् ॥३८॥

त्वदीयैर्भूतेजो-जल-पवन-खैः सम्प्रघटितं
शरीरं सम्प्राप्त हृदयमपि तन् त्वद्गुणमयम् ।
अखण्डाहंकारोऽप्ययि ! भरतभूपुत्र इति मे
भृशं धन्यं मन्ये जननि ! जनन मामकमिदम् ॥३९॥

हृदम्भोजे मे त्वत्प्रतिकृतिरुदारा विलसतु
शुभा भावाः सर्वे विदधतु जयोद्घोषमसमम् ।
परा पश्यन्ती वाङ्निगिरतु तव स्तोत्रमुचितं
चिदन्तर्ज्योतिस्त्वां परिचलतु नीराजनमिव ॥४०॥

न मन्येऽन्यत् सेव्यं त्वदितरदयं दैवतमिह
न जानेऽन्यत् तत्त्वं त्वदितरदुदारं परतरम् ।

न कुर्वेऽन्यत् कर्म त्वदुचिततपर्याविरहितं
न लोके न शृण्वे न च किमपि भाषे त्वदपरम् ॥४१॥

त्वदायत्ता वाणी तव महिमगीते विरमतु
त्वदायत्ता दृष्टिः परिरमतु हि प्रेक्षणरतौ ।
त्वदायत्तं चित्तं ह्युपरमतु सञ्चिन्तनविधौ
त्वदर्थे सञ्जीर्णं सुचिरमपि कायः पततु मे ॥४२॥

पुनर्जन्मन्यम्ब ! त्वदमलजलानां जलचरः
त्वदीयानां वृक्ष-प्रतति-कुसुमानां मधुकरः
भवेयं त्वत्स्पर्शातिशुचिपवनानां च भुजगः
समीहे न स्वर्गं सुरगुरुपदं चापि सुखदम् ॥४३॥

शिलाखण्डे कस्मिंश्चित् क्वचन विपिने निर्जनगणे
समासीनः शान्तः त्वदुरुगुणसञ्चिन्तनरतः ।
न मन्येऽहं सिंहासनमपि वरिष्ठं सुरपते
महारत्नज्योतिःशबलित-समग्र-ग्रहगणम् ॥४४॥

अये गन्धर्वाणां स्वरमधुरिमोदगीतयशसाम्
उदीर्णं सङ्गीतं सकलविध वादित्रसहितम् ।
तथा नो मच्चित्तं हरति हि यथा त्वद्गिरितटी-
-पतद्भूरिक्षोभोच्छलित-तटिनीनां कलकलः ॥४५॥

त्वदीयानां मातः सकलसुगुणानां खलु भवेत्
यदा काव्योद्गानं कविवरवचोभिः स्तुतिमयम् ।
तदा मन्ये शक्यं निबिडवन-पर्णालिगणनं
परिच्छेद-ज्ञानं सुलभमिव कुम्भैश्च जलधेः ॥४६॥

नमस्ते प्राचीतः प्रभु-निरत-चैतन्यजननि !
नमोऽवाचीतस्ते महित-तिरुवल्वार-जननि !
प्रतीचीतः साधुप्रवर-नरसीभक्त-जननि !
ह्युदीचीतः श्रीमत्सुकवि-तुलसीदास-जननि ॥४७॥

उपर्यग्निज्वाला-रुणिम-रुचि नीचैश्च हरितं
सुचकाङ्कं मध्ये तुहिन-धवलं पावनतमम् ।
त्रिपुण्ड्रं ते नूनं जननि नवराष्ट्रध्वजमयं
त्रिधा धर्माध्वानं सततमुपदेष्टु विजयताम् ॥४८॥

अयि मातः सच्चिन्मयि ! सदसतो लोकमखिलं
तमोग्रस्तं ज्योतिर्मयि ! कुतमसो ज्योतिरमलम् ।
स्वदामर्त्यं मृत्योरमृतमथ वा चामृतमयि
कटाक्षव्याक्षेपैर्झटिति गमयन्ती विजयसे ।।४९।।

तमःस्तोमो यातु क्वचिदपि जगद्बाह्यकुहरे
रजोरागो वेगाद् द्रवतु हतपातालविवरे ।
सदा सत्त्वज्योत्स्ना प्रविततमनोहारिसुषमे
ह्यखण्डब्रह्माण्डे विहरतु सुकीर्तिस्तव मुदा ।।५०।।

श्रुतिस्मृतिपुराण–धर्मपद–जैनतत्त्वागम –
रघूत्तमचरित्र–भागवत–भारतोद्दीपितः ।
रजोयुततमःक्षयाय सकलोत्तमश्रेयसे
चिराय भुवि राजतां जननि ! धर्मदीपस्तव ।।५१।।

---

पूर्वार्ध समाप्त

# उत्तरार्ध



## प्रकरण २८ वें

## कांहीं थोर लेखक

प्रस्तुत ग्रंथाच्या पूर्वार्धामध्ये ठिकठिकाणीं ल्हानमोठ्या शेकडों साहित्यिकांचा कोठे थोडक्यात तर कोठे सविस्तर असा परिचय आनुषंगिकपणे आलेला आहे. वास्तविक तो परिचय सविस्तरपणें देण्याइतक्या योग्यतेचे त्यामध्ये अनेक लेखक आहेत त्या दिशेने किंचित् प्रगति म्हणून काही मोजक्याच अर्वाचीन साहित्यिकांचा किंचित् सविस्तर परिचय प्रस्तुत प्रकरणात देण्यात येत आहे.

सतराव्या शतकापासून विसाव्या शतकापर्यंतचा काळ हा अर्वाचीन कालखंड म्हणून आम्ही कल्पिलेला आहे. आजवर लिहिण्यात आलेल्या संस्कृत साहित्यविषयक ग्रंथात पंडितराज जगन्नाथ हा शेवटचा संस्कृत लेखक मानण्यात आलेला आहे. त्या दृष्टीने प्राचीन व अर्वाचीन कालखंडाच्या सीमेवरील श्रेष्ठ साहित्यिक म्हणून आरंभीं जगन्नाथ पंडिताचा परिचय देण्यात येत आहे. संस्कृत साहित्यात मधुर काव्यरचना व तर्ककर्कश पद्धतीची शास्त्रीय ग्रंथरचना या दोन्ही दृष्टींनी १७ व्या शतकातल्या जगन्नाथ पंडिताने जसें असाधारण यश संपादन केलेलें आहे, तसे इतर कोणास लाभलेलें दिसत नाहीं

"दिल्लीवल्लभ-पाणिपल्लव-तले नीत नवीन वय"

या पंक्तीद्वारा, त्याचप्रमाणे "आसफविलास" काव्यातील शहाजहानाच्या वर्णनद्वारा जगन्नाथाने आपल्या काळाचा एका परीने प्रत्यक्षच निर्देश केलेला आहे. शहाजहान बादशहा इ. स. १६५८ मध्यें मोगल साम्राज्याचा अधिपति झाला, त्यावरून जगन्नाथाच्या काळाचा वाद रहातच नाही. रसगंगाधराच्या आरंभीं

श्रीमज्ज्ञानेन्द्रभिक्षोरधिगत-सकलब्रह्मविद्याप्रपंच
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।

देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयम्
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः ॥

पाषाणादपि पीयूषं स्यन्दते यस्य लीलया
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम् ॥

या दोन श्लोकामध्ये आपल्या गुरुपरंपरेचे स्तवन करण्याच्या निमित्ताने लक्ष्मी व पेरुभट्ट या आपल्या मातापित्याचा नामनिर्देश जगन्नाथाने मोठ्या भक्तीने केलेला आढळतो. वरील श्लोकात उल्लेखिलेले ज्ञानेन्द्रभिक्षु, महेन्द्रपंडित, खण्डदेव, वीरेश्वर शेष, हे महाविद्वान् पंडित, जगन्नाथाचा पिता पेरुभट्ट याचे विविध शास्त्रातील आचार्य होते. पेरुभट्ट हा तेलंगणातील वेल्लनाडु (वेगिनाटी) वंशातील विद्वान् पंडित होता. जगन्नाथाने आपल्या विद्वान् पित्याचे यश असाधारण ग्रथरचना करून शतगुणित केले.

तारुण्याच्या आरंभी काशीमध्ये सर्वशास्त्रांचे अध्ययन संपल्यानंतर जगन्नाथ पंडित जयपुरास आला. तेथे त्याने राजाच्या साहाय्याने एक संस्कृत विद्यालय चालविले. जयपुरात त्याकाळी अनेक दाक्षिणात्य तेलुगु ब्राह्मण रहात होते. त्यापैकी नारायणभट्ट नावाच्या विद्वानाने शास्त्राध्ययनासाठी जगन्नाथाचे शिष्यत्व स्वीकारले होते असे आढळते. वयाच्या वीसाव्या वर्षीच अगाध पाण्डित्यामुळे जगन्नाथाला दिल्लीपतीचे सभापण्डितपद प्राप्त झाले होते असे दिसते. या संबधात एक दन्तकथा श्री आप्पाशास्त्री राशीवडेकर यानी आपल्या संस्कृतचन्द्रिकेत दिली होती. आप्पाशास्त्रींच्या लेखनशैलीचा परिचय होण्याच्या दृष्टीने ती दन्तकथा त्याच्याच शब्दात उद्धृत करणे योग्य होईल —

"आसीत् किल दिल्लीपतेः कोऽपि पुरोहितो म्लेच्छजातीयो यः संस्कृत भाषाब्धेः परं पारम् आसाद्य शास्त्रसागरमुल्लंघ्य च तत्र तत्र निवसत् पण्डितगणान् पराभवति स्म। स च तस्तै पण्डितैर्विवदमानस्तांस्तान्विदुषो विजयमानस्तत्र तत्र प्रदेशे सनातनं भारतधर्ममुत्सादयमानो निराकुर्वन्, प्रतिपादयन् यवनधर्मं, परिखण्डयन् शास्त्राणि, म्लेच्छजल्पितया संस्कृतगिरा भारतीयान् विबुधानपजिताशेषदक्षिणप्रदेशः सकलविद्यावैशारद्यभासिता नानाविधबुधमण्डलीमण्डिता पण्डिताग्रेसर-समुपक्रम्यमाण-दार्शनिकविषयचर्चाम् अर्चानुकूलफलसमर्पण-सन्तापदपायमानेन भगवता शशिखण्डमौलिना समुद्भासिता, भासितादेशनिभुवनया परमपावनया मन्दाकिनीदेव्या परिगता, समुपचीय मानसुकृतराशिं काशीं नाम गरीयसीं नगरीम् उपस्थौ ततश्च तत्रत्यान् विबुधान् आह्वयमानं काजी सभां महीयसीं निर्माय विवादम् आरिप्सयामास। पण्डिता अपि तदानीमाग्रहपूर्विकया सभामागत्य विविधाभियुक्तिभिर्नानाविधाभिर्वचनरचनाभि परिस्फुरन्तीभिः प्रमाणपरम्पराभिश्च काजीम् जेतुमयतन्त। काजी तु पवन इव पथि

पतितान् तृणच्छेदास्तानि वचनजालानि क्षणादेव प्रतिहिमवानस्पण्डिमतः करनखाग्र रानामिलन्त्रमाना धवलकीर्तिसन्ततिमिव पुञ्जीभूयोपागता कूर्चिका परिष्कुर्वन्, सावहेल माननमारुरोह । तदनु निवादेऽप्रभविष्णोऽप्यपनामासहिष्णवो वाराणसीनिवासिनो द्विजन्मानोऽनुचर-विपदपहर्तारम्, सृष्टिस्थितिप्रलयकर्तारम्, निजपरिचरप्रतिभटगण्डनं सुधाकरकलामण्डन समुपेत्यानन्यगतेन मनसा नानाविधाभिस्तत्कालसमुचिताभिः करुण रसपरिप्लुताभिः स्तुतिभिस्तमेव भगवन्तमुपप्रीणयामासु । अवगताशेषवृत्तान्तश्च भगवान् भुजगभूषणो भागीरथीमौलिर्महेश्वरस्तदाले एव प्रत्यक्षीभूय वाचमेतामुदीरयामास । अस्त्यत्र कस्यापि रत्नेश्वरनाम्नो द्विजन्मनो धनिकस्य सदन आम्मसिकः कश्चिद् भिक्षुः । स एवास्यावलिप्तस्य यवनहतकस्य पराजये प्रभवतीति स एवाभ्यर्थ्यताम्। ते तु ब्राह्मणाः फलमिवात्मनो मनोरथद्रुमस्य तद्वचनमाकर्ण्य द्रुतपद रत्नेश्वरश्रेष्ठिनो भवनमागत्यासाद्य च श्रेष्ठिन भगवतो निदेशमावेदयामासु । स च तेषा तद्वचनमाकर्ण्य परमविस्मयमापन्नस्तमेव निराधिकृतमात्मनो दास समाहूय निजगादामिलषित ब्राह्मणसमाजस्य । अप्रच्छन्न अपि प्रभवसि कर्मण्येतस्मिन्निति । ततो धीवरजालाय मानेनानारस्थेन तन्तुसन्तानेनाजानुलम्बिना मलीमसेन वसनेनावेष्टिताध कायो जठरभरमन्थरगतिरसमुभयतः प्रवृद्धजलकुम्भवहनसञ्जातैः किणैः समुल्लसित पीवरतनुः श्यामायमानेन चैलखण्डेन वेष्टितोत्तमाङ्गो घटीचेटो हुम् करिष्याम्येतद्यदि भवन्तोऽनुजानीयुरिति मन्द मन्द प्रत्ययोजिष्ट । ततः श्रेष्ठिना समर्पिते तस्मिन् समुदिताः ब्राह्मणाः कौशेयानि पट्टवसनानि परिधाप्य अनर्घभूषणैरलङ्कृत्योष्णीषासमुल्लसित च तस्य मूर्धनि विधाय कनकशिबिकायामारोप्य महीयसा महोत्सवेन विरचितायां सभायामानाय्य तमुपमवेशयामासुः । काजीरपि समाहूतागतस्तत्रैव सन्मुखमुपाविशत् । ततो दोलायमानकूर्चिकाकलाप समुद्धूयमानश्मश्रुजाल च प्रवदता काज्यासह प्रवृत्ते भिक्षोर्विवादः । अन्ते पुनर्भिक्षुवचनचातुरीविस्मितोऽश्रुतपूर्वाः सहस्रशो युक्तीरा कर्ण्येतिकर्तव्यतामूढो विवादसागरमुत्तरीतुमप्रभविष्णुः काजी तूर्ष्णी भावमवलम्ब्य भिक्षु प्रणनाम । ततो विजित विजित भिक्षुणेति शतात्स्वरं प्रवृत्तेषु वचनेषु, तदानीमेव मूर्च्छत्सु तूर्येष्वाहन्यमानेषु मुरजेषु, ध्वन्यमानेषु दुन्दुभिषु, आध्मायमानेषु शङ्खेषूच्चरत्सु वेलानुकारिषु सिंहनर्दकान्रेकारेषु, महोत्सवमय इव मङ्गलमय इव प्रमोदमय इव यशोमय इव, च तस्मिन् समये सबहुमान सप्रणाम च सौवर्णं यानमारोप्य भिक्षु श्रेष्ठिन सदनमानाय्य यथावृत्त वृत्त निजगदुर्द्विजन्मान. । ततस्तु समुद्भूतजिज्ञासा. सर्वेऽपि तस्य भिक्षोः कुल नाम विद्याभिमजन च पप्रच्छु । तस्मिंस्त्वाशेषतोऽपि तेन कथिते निश्चिक्युः काशीस्था विबुधा अयमेव पण्डितराजो जगन्नाथ इति । काजी तु तत. प्रभृति तस्य पण्डितराज-जगन्नाथस्य मित्रतामुपागच्छत् । ततो गच्छता कालेन दिल्लीं गतो बादशाह विज्ञाप्य जगन्नाथमपि दिल्लीनगर एवानाययामास । तत. प्रभृति च प्ररूढ जगन्नाथबादशाहयोः सौहार्दमिति । ”

जगन्नाथपण्डिताने एकूण तेरा ग्रन्थ लिहिले ते असे —(१) अमृतल्हरी (२) करुणाल्हरी (३) लक्ष्मील्हरी (४) सुधाल्हरी (५) गङ्गाल्हरी (६) भामिनी विलास (७) आसफविलास (८) जगदाभरणम् (९) प्राणाभरणम् (१०) यमुना-वर्णनम् (११) मनोरमाकुचमर्दनी टीका (१२) चित्रमीमांसाखण्डनम् व (१३) रसगंगाधर. या सर्व ग्रन्थापैकी रसगंगाधरामध्ये जगन्नाथाचें प्रकाण्ड पाण्डित्य उत्कृष्टपणे अभिव्यक्त झालेलें असून, त्याला सर्व साहित्यशास्त्रज्ञांच्या समाजात मोठी मान्यता मोठी मिळाली आहे. या ग्रन्थात जगन्नाथाचे न्यायमीमांसादि शास्त्रांतील असाधारण विचक्षणत्व पदोपदीं प्रकट झालेलें आहे व तें लक्षात घेता तत्कालीन समाजाने त्याला दिलेली 'पण्डितराज' ही पदवी किती यथार्थ होती याची कल्पना येते. या रसगंगाधरात विविध सिद्धान्ताच्या उदाहरणार्थ उद्धृत केलेले सर्व श्लोक इतराच्या ग्रन्थातून न घेता जगन्नाथाने स्वत रचलेले आहेत. स्वतःच्या या कर्तृत्वाचें वर्णन जगन्नाथाने पुढील श्लोकात मोठ्या अभिमानाने केलेलें आहे.

" निमग्नेन क्लेशैर्मननजलधेरन्तरुदर
मयोन्नीतो लोके ललित-रसगंगाधर-मणि ।
हरन्नन्तर्ध्वान्तं हृदयमधिरूढो गुणवताम्
अलङ्कारान् सर्वानपि गलितगर्वान् रचयतु ॥ "

" परिष्कुर्वन्त्वर्थान् सहृदयधुरीणा कतिपये
तथापि क्लेशो मे कथमपि गतार्थो न भविता ।
तिमीन्द्रा संक्षोभं विदधतु पयोधे पुनरिमे
किमेतेनायासो भवति विफलो मन्दरगिरे ॥

निर्माय नूतनमुदाहरणानुरूपं काव्यं मयाऽत्र निहितं न परस्य किञ्चित् ।
किं सेव्यते सुमनसा मनसाऽपि गन्ध कस्तूरिका-जननशक्तिभृता मृगेण ॥"

अशा प्रकारें असाधारण पाण्डित्याने तळपणाऱ्या जगन्नाथ पण्डिताचा एका यवनीशी सम्पर्क आला. त्यामुळे काशीतल्या पण्डितानी त्याला समाजबहिष्कृत केलें. पुढे त्या यवनीसह गंगेच्या तीरावर बसून जगन्नाथाने गंगाल्हरी स्तोत्राचें गायन आरम्भिलें. स्तोत्राच्या प्रभावाने गंगेचें पाणी बावन्न पायऱ्या वर चढल व त्यात यवनीसह जगन्नाथाला जलसमाधि मिळाली अशी कथा प्रसिद्ध आहे.

पण ही कथा सर्वथा काल्पनिक असल्याचें आप्पाशास्त्री राशीवडेकरानी अनेक प्रमाणाच्या आधारें सिद्ध केलें आहे. ते म्हणतात, "स्वभावत एव किल क्रोधयन्तो यवना स्वाङ्गनासु परस्य प्रेममयं पूज्यभावसम्भवमपि नयनपात न सहन्ते किं पुनर्विधर्मीयस्य कामाविष्टमनस आत्मन समक्षमेव निजकन्याविषयिणीं प्रार्थनाम्। यद्यपि भूयांसो विद्वांसो वैदुष्यस्यानुरूपमहार्घमाप्नुवन्ते तथापि न हि काममात्रात्

कत्या धर्ममुल्लङ्घयितुमीहन्त इत्यपि नैव विस्मरणीयम्। क्षुद्रतमोऽपि यवनीं यदि विध र्मीये कृतया कान्तागतया कथयाऽपि कोपस्य परां कोटिमारोहत् तदा कथं वा निखिल भारतवर्षभूपालसमभ्यर्चितशासनो दिल्लीश्वरः शाहजहान पण्डितेनापि जगन्नाथेनात्मनः समक्षमभ्यर्थितां कन्यां तस्मै प्रदाय यवनधर्ममवधीरयितुं प्रभवेत्। ननु नैतत् कथं चिदपि सम्भवति। "यवनीनवनीतकोमलाङ्गी" इत्याद्या श्लोका यदि पण्डितराज विरचिता एवेति स्वीक्रियेत तदा भामिनीविलासेऽपि तेषामुपनिबन्धनमङ्गीकर्तव्यम्। "दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया" स्वीयपद्यरत्नानां भामिनीविलासाख्या मञ्जूषा निर्मितवता पण्डितराजेन कथं वा तानि विस्मर्येरन्? कथं न मञ्जूषायां सग्रथेन्? इत्यपि विचारणीयं विद्वद्भिः। अतो नैतानि पद्यानि पण्डितराजप्रणीतानीति प्रतीयन्ते। ततश्च जगन्नाथस्य यवनीपरिणयविषयिणीयमाख्यायिका गगनं आलेख्यनमनुहरति। किं च सार्वभौमायमानो दिल्लीश्वरः सभायां जलं पिबेदित्यपि न श्रद्धेयम्। नापि वा तस्य कन्यका शिरसि कलशीं निधाय हीनभाग्या योषिदिव नीरमानयेदित्यपि सम्भाव्या स्पदम्। येन्य पन्थानोऽपि भृत्यैरेवादिश्यन्ते तेषामपर्यपदया कन्यास्तत्र च 'सुलतानी' इत्यादिविशेषणार्हा प्रगल्भे वयसि पदमर्पयन्त्यः परपुरुषपरिवृत्तायां परिषदि पानीयं मानयेयुरित्यपि विरुद्धमेव प्रतिभाति। अतो निर्मूलैव जगन्नाथस्य यवनीपरिणीतवृत्त-विषयिण्याख्यायिका।

अथ भगवत्या भागीरथ्यात्मनोऽङ्कोषु विलयं नीतो जगन्नाथ इत्येषापि किंवदन्ती कियत् सत्यभावमवलम्बत इति विचार्यते। ययैव पण्डितराजविरचितया स्तुत्या प्रमुदितहृदया देवनदी जगन्नाथं पावयामासेति श्रूयते सा किल पीयूषलहरी गङ्गा लहरीति वा प्रथिता। यदि नूनमिर्दिष्टा लोकवार्ता मृषात्वं नावगाहेत तदा गङ्गालहरी प्रणयनकाल एव जगन्नाथस्यायुषोऽवसानावसर इति स्फुटमेव। ततश्च गङ्गालहरीप्रणयनोत्तरं जगन्नाथो नान्यं प्रबन्धं निर्मास्यतीत्यपि सिद्धम्। अर्थात् जगन्नाथविरचिते प्रबन्धान्तरे गङ्गालहरीगतानि पद्यानि नैव दृश्येरन्। किन्तु तानि दृश्यन्ते। अत एव गङ्गालहरी प्रणयनावसान एव जगन्नाथस्यायुषः परिसमाप्तिरिति वचनं नैव विचारसहम्। नापि गङ्गालहरीमिव जगन्नाथविरचिता काचिदपि मन्दाकिन्या स्तुतिरस्ति यस्या अवसानसमय जगन्नाथस्य निधनावसरं मन्यामहे। अतः सर्वथा निर्मूलैयमाख्यायिका। दृश्यन्ते च गङ्गालहरीगतानि पद्यानि रस गङ्गाधरे यथा —

"विधत्तां निःशङ्कं निरवधि समाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः।
कृतं प्रायश्चित्तैरलमथ तपोदानविभवैः
सवित्री कामानां यदि जगति जागर्ति भवती॥"

इति माधुर्योदाहरणम्। एवमनन्वयालङ्कारप्रकरणेऽपि —

"कृतक्षुद्राघौघानथ सपदि सन्तप्तमनस.
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहा ।
अपि प्रायश्चित्त-प्रसरण-पथातीत-चरितान
नरानूरीकर्तुं त्वमिव जननि त्व विजयसे ॥"

एव भावस्योदाहरणप्रसङ्गेनोक्तम् । जगन्नाथेन तत्रैव मन्निर्मितास्च पन्च लहर्यो नाम पीयूषलहरी, सुधालहरी, लक्ष्मीलहरी, अमृतलहरी, करुणालहरी चेति । एव च पीयूषलहर्यपराख्याया. श्रीगङ्गालहर्यां. पन्चसु लहरीष्वन्तर्भूततया लहरीपन्चकस्य च रसगङ्गाधर उल्लिखत्वेन गङ्गालहरीगताना पद्याना रसगङ्गाधरे दृश्यमानत्वात गङ्गालहर्या रसगङ्गाधरनिर्माणात् प्राक् सम्भूतत्व स्पष्टमेव प्रतियते । नतस्च निर्मूलेय-माख्यायिका यदुच्यते लीनो मन्दाकिन्या. क्रोडे जगनाथ इति । "

श्री आप्पाशास्त्री राशीवडेकराचा हा युक्तिवाद निर्तोड नाही असं कोण म्हणेल ?

शहाज्हान बादशहाच्या म्हातारपणीं जगनाथाचा परममित्र राजकुमार दारा-शिकोह याला त्याच्या भावाने म्हणजे औरंगजेबाने ठार मारलें. शहाज्हानहि तुरुंगात पडला. इतरहि मोठमोठ्या लोकाना औरंगजेबाने प्राणसंकटात टाकलें. अशा विषप्रसगीं जगन्नाथाने आसामचा राजा प्राणनारायण याच्या आश्रयास राहून काळ घालविला असें दिसतें. जगनाथाचे 'प्राणाभरण' हें काव्य याच प्राणनारायणास उद्देशून लिहिलेले आहे.

आपल्या म्हातारपणीं जगनाथ काशींत जाऊन राहिला. तेथेंच रसगंगाधर हा ग्रंथ लिहिला. या ग्रंथातील उत्तरालंकाराच्या उदाहरणातील श्लोकाच्या तीन पक्ती लिहून झाल्यावर चवथी पक्ति लिहिण्यापूर्वी त्याचं देहावसान झालं, असें अनुमान सहज करता येण्यासारखें आहे.

आजवर संस्कृत साहित्याचे इतिहास लिहिणाऱ्या अनेक लेखकानी साहित्याचे जे कालखण्ड कल्पिले आहेत, त्यामध्ये जगनाथाचा अन्तर्भाव त्याच्या दृष्टीने अन्तिम कालखण्डातील शेवटचा पडितकवि म्हणून करण्यात आलेला दिसतो. जगनाथाच्या निधनानतर संस्कृतसाहित्यसृष्टीचा प्रवाहप्रवाह खडित झाला अशी या पद्धतीची समजूत दिसते. ती चुकीची आहे हें सिद्ध करण्यासाठींच प्रस्तुत प्रबंधात आम्ही जगनाथाच्या नतरच्या काळातील संस्कृत साहित्याचा परामर्श यथाशक्ति घेतलेला आहे. म्हणूनच १६ व्या शतकानतर झालेल्या कालखंडातील जगनाथ हा आद्यकवि आहे असें मानल्यास तें विशेष अप्रस्तुत ठरणार नाही.*

---

*जगन्नाथाचे स्फुट श्लोक, 'पण्डितराज-शतकम्' या नावाने निर्णयसागरमध्या आर्य प्रेस मध्ये मुद्रित झाले आहेत.

## अप्पय्यदीक्षित

सोळाव्या शतकाच्या उत्तरार्धात (इ. स. १५५४) कांचीजवळच्या अडयपाल नावाच्या गावात अप्पय्यदीक्षिताचा जन्म झाला. याच्या वडिलांचे नाव रंगराजाध्वरी असे असून गोत्र भारद्वाज होते. रंगराजाध्वरी दीक्षिताने 'अद्वैतविद्यामुकुट', 'विवरणदर्पण' इत्यादि वेदान्तविषयक ग्रन्थ लिहिले आहेत. वेलोर येथे चिन्नबोम्म नावाच्या राजाने भरपूर सुवर्णदान देऊन या महापंडिताचा सन्मान केला. त्यानंतर विजयानगरच्या व्यंकटदेवाने त्याला निमंत्रण पाठविले. विजयानगरामध्ये अप्पय्य दीक्षिताच्या आयुष्याचा बराच काळ गेला. म्हातारपणी पाण्ड्य देशाच्या मदुरा नगरीमध्ये त्याने काही वर्षे घालविलीं असे दिसते. इ. स. १६२६ मध्ये वयाच्या ७२ व्या वर्षी अप्पय्य दीक्षिताचे चिदंबरम् येथे देहावसान झाले. आपल्या आयुष्यात या महापंडिताने एकूण १०४ ग्रंथ लिहिले. त्यांपैकी काही प्रमुख ग्रंथांची नावें पुढीलप्रमाणे आहेत—

**काव्यग्रंथ**—(१) आत्मार्पणस्तुति (शिवपञ्चाशिका)। (२) आर्याशतकम्। (३) दशकुमारचरितसंग्रहः (काव्यमालेत मुद्रित)। (४) पञ्चरत्नस्तव। (५) शिवकर्णामृतम्। (६) वैराग्यशतकम् ७ (काव्यमालेत मुद्रित)। (७) भक्तामरस्तोत्रम् (काव्यमालेत मुद्रित)। (८) शान्तिस्तव.। (९) रामायणतात्पर्यनिर्णय। (१०) रामायणतात्पर्यसंग्रह। (११) भारतस्तव. (१२) रामायणसारसंग्रह. (१३) रामायणसारस्तव। (१४) वरदराजाष्टकम्। (१५) आदित्यस्तोत्ररत्नम्। (१६) शिवकर्मस्तवरत्नम्। (१७) शिवमहिमकलिकास्तव।

**टीकाग्रंथ**—(१) वेदान्तदेशिककृतकाव्यटीका (२) गोविंददीक्षितकृत-हरिवंशसारचरिताची टीका. (३) कृष्णमिश्रकृत प्रबोधचन्द्रोदय नाटकाची टीका.

**शास्त्रीय प्रबंध**—(१) चित्रमीमांसा (२) वृत्तिवार्तिकम् (काव्यमालेत मुद्रित)। (३) कुवलयानन्द। हा कुवलयानंद ग्रंथ अलंकारशास्त्रात प्रवेश करू इच्छिणाऱ्यांना अत्यंत साहाय्यकारक आहे. हा ग्रंथ एका दृष्टीने जयदेवकृत चंद्रालोक नावाच्या अलंकारशास्त्रीय ग्रंथावरील टीकाच मानण्यात येतो.

सिद्धान्तदीपिका ग्रंथातील उल्लेखानुसार सिद्धान्तकौमुदीचे लेखक भट्टोजी दीक्षित यांनी अप्पय्य दीक्षिताजवळ वेदान्ताचा अभ्यास केला होता असे दिसते. पूर्व आणि उत्तर या दोन्ही मीमांसा शास्त्रांत अप्पय्य दीक्षिताचा अधिकार सर्वमान्य होता. वेदान्तातील श्रीकण्ठ मताची प्रतिष्ठापना करण्याचे श्रेय अप्पय्य दीक्षिताचे आहे. व्ही. ए. रामस्वामी शास्त्री यांनी सिद्धान्तलेशसंग्रहाच्या प्रस्तावनेत अप्पय्य दीक्षिताला 'वक्षःस्थलाचार्य दीक्षित' ही पदवी कृष्णदेवरायाकडून कशी मिळाली या संबंधी एक रोचक कथा दिली आहे. ती कथा अशी—

कृष्णदेवराय आपल्या लावण्यसुंदर राणीसह कांचीवरमूच्या वरदराज प्रभूच्या दर्शनार्थ गेला. त्यावेळीं अप्पय्य दीक्षित उपस्थित होता. ती लक्ष्मीसारखी स्वरूपसुंदर राणी देवापुढे उभी राहिलेली पाहून अप्पय्य दीक्षिताच्या तोंडून श्लोक निघाला तो असा,

**" काञ्चित् काञ्चन गौराङ्गीं वीक्ष्य साक्षादिव श्रियम् ।**
**वरदः संशयापन्नो वक्षःस्थलमवैक्षत ॥ "**

आपल्या राणीला अशा प्रकारे लक्ष्मीची आणि पर्यायाने स्वतःला विष्णूची उपमा अप्पय्य दीक्षिताने सूचित केलेली ऐकून राजा प्रसन्न झाला आणि त्याने कवीला तत्काळ, **' वक्षःस्थलाचार्य दीक्षित '** अशी पदवी दिली.

* * *

## तंजावरचे विद्याप्रेमी नृपति व त्यांचे आश्रित कवि

तंजावरच्या नायकवंशात रघुनाथ हा राजा १७ व्या शतकाच्या आरंभीं झाला. त्याची राणी रामभद्राम्बा ही एक श्रेष्ठ कवयित्री होती. आपला पति हा साक्षात् रघुनाथ-रामचन्द्रच—आहे अशी तिची श्रद्धा होती. तदनुसार ' रघुनाथाभ्युदयम् ' नामक एक महाकाव्य तिने लिहिलें. स्वतः राजा रघुनाथ हाहि श्रेष्ठ प्रतीचा विद्वान् व कलाभिज्ञ होता. त्याने लिहिलेल्या संगीतसुधा व भारतसुधा या ग्रन्थांवरून त्याचे संगीत व नृत्यशास्त्रावरील असाधारण प्रभुत्व प्रत्ययास येते. याव्यतिरिक्त रघुनाथाने पुढील काव्यग्रन्थ लिहिले आहेतः—(१) पारिजातहरणम् । (२। वाल्मीकिचरितम् । (३) अच्युतेन्द्राभ्युदयम् । (४) गजेन्द्रमोक्षः । (५) नलाभ्युदयम् । (६) रुक्मिणीकृष्णविवाहम् । (७) यक्षगानम् व (८) रामायणसारसङ्ग्रहः ।*

---

*राज्याची धुरा सांभाळून शारदेची सेवा करणाऱ्या राजाची परम्परा संस्कृत साहित्याच्या इतिहासात फार प्राचीन काळापासून चालू आहे. असे साहित्यिक भूपति पाश्चात्य देशाच्या इतिहासात दिसत नाहीत. साहित्याला उत्तेजन देणे वेगळें व स्वतः साहित्य निर्माण करणे वेगळें. प्रस्तुत रघुनाथ नायकाप्रमाणें साहित्यनिर्मिति करणाऱ्या अर्वाचीन कालखंडातील अनेक साहित्यिक नृपतींचा उल्लेख प्रस्तुत ग्रंथाच्या पूर्वार्धात ठिकठिकाणी आला आहे. तो असा. एरलपट्टी राजा मानवेद ( कृष्णनाटकम्चा लेखक ) रामवर्मा यच्ची युवराज उर्फ अश्विनी महाराज ( रुक्मिणीपरिणयम् व शृंगारसुधाकरम्चा लेखक ) केरळवर्मा ऊर्फ वेरळवाल्दिास ( गुरुवायुरशतकम्चा लेखक ),

[ पुढील पानावर चालू ]

रघुनाथ नायकाच्या स्तवनार्थ कृष्णकवीने 'रघुनाथभूपालीयम्' या नावाचे काव्य लिहिलें आहे. यातील सर्व श्लोक विविध अलंकारांची उदाहरणें म्हणून कवीने रचलेले आहेत. या काव्याची टीका विजयेन्द्रतीर्थाचा शिष्य सुधीन्द्रयति याने रघुनाथ नायकाच्या आदेशानुसार लिहिली आहे. रघुनाथाच्या राजसभेत तेलुगु व संस्कृत या भाषेंत काव्यरचना करणाऱ्या अनेक कवयित्री होत्या. त्यांत मधुरवाणी ही कवयित्री विशेष प्रतिभासम्पन्न होती. रघुनाथाने स्वतः तेलुगु भाषेंत एक रामायण लिहिलें होतें. त्याचें भाषांतर संस्कृतांत व्हावें अशी त्याची तीव्र इच्छा होती. हें काम मधुरवाणीकडे सोपवावें असा त्याला स्वप्नादेश झाला. राजाची इच्छा हीच आज्ञा मानून मधुरवाणीने चौदा सर्गांचें रसालंकार-रमणीय काव्य संस्कृतांत लिहिलें.

[ मागील पानावरून पुढे चालू ]

रामवर्मा कुलशेखर (पद्मनाभशतकाचा लेखक), शहाजी (तंजावरचा) (चन्द्रशेखरविलासम् नाटकाचा लेखक), मलबार राजवंशांतील रामकवि (सुपालावज्रतुण्डम् नाटककार) श्राङ्गनूर युवराज गोदवर्मा (रससदनभाण रामचरितम्, सुधानन्दलहरी, मुररिपुस्तोत्रम् इत्यादि ग्रंथाचा लेखक), श्राङ्गनूरवंशीय रामवर्म युवराज (किरातार्जुनीय-व्यायोग व जरासन्धवध- यायोगाचा लेखक), युवराज वर्मा (कोचुण्णी ताम्पूरान्) ऊर्फ कविसार्वभौम— (अनङ्गविजयभाण विटराजभाण, त्रिपुरदहनम्, वल्लयद्भुतम्, विप्रसन्देशम्, देवदेवेश्वरशतकम्, उत्तररामचम्पू, बाणायुद्धचम्पू देवीसप्तशतीसारः या ग्रंथाचा लेखक), नेपालेश्वर प्रतापमल्ल (याची अनेक अष्टकें नेपाळातील मन्दिरावर कोरलेली आहेत.) चिन्नबोम्म भूपाल (सङ्गीतराघवम् (सहा सर्ग) चा लेखक), विश्वनाथसिंह वाघेला (रामचन्द्राह्निकम् या सटीक गेयकाव्याचा लेखक), म्हैसूरनरेश वेंकटप्पा नायक (शिवाष्टपदी या गेय काव्याचा लेखक), व्यंकोजी भोसल्याचा पुत्र सर्फोजी (इ. १७१२-१७२७ राघवचरितम् किंवा संग्रह रामायणाचा (१२ सर्ग) लेखक) त्याने स्थापन केलेले "तंजावर महाराज सर्फोजी सरस्वती महाल लायब्ररी' या नावाचे विख्यात संस्कृत ग्रन्थालय हें सर्फोजी भोसल्याच्या विद्याप्रेमाचें भव्य स्मारक आहे)

या राजा व्यतिरिक्त साहित्यसेवा करणाऱ्या अनेक मन्त्र्यांच्या नावांचा व त्यांच्या ग्रन्थांचा उल्लेख ठिकठिकाणी प्रस्तुत ग्रन्थांत आला आहे 'राजसमाजाची संस्कृतोपासना' या शीर्षकाखाली प्रस्तुत विषयावर स्वतंत्र प्रबन्ध लिहिता येण्यासारखा आहे

